॥ श्री करावलंबन स्तोत्रम्

त्रय्या विकास-कमजं मुहुरन्तरेव
सञ्चिन्त्य मध्व-गुरु-पाद-युगं गुरूंश्च ।
वेदेश-पाद-जलजं हृदि साधु कृत्वा
संप्रार्थये श्रुति-विकासक-हस्त दानम् ॥ १ ॥

पद्मासनादि सुरसत्तम-भूसुरादि
सल्लोक-बोध-जजने बदरी-निवासिन् ।
सच्छास्त्र-शस्त्र-हत-सत्कुमते सदिष्ट
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २ ॥

आम्नाय-विस्तर-विशारद शारदेश
भूताधिपादि-सुर-संस्तुत पादपद्म ।
योगीश योगि-हृदयामल-कञ्जवास
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३ ॥

सद्ब्रह्म-सूत्र-वरभारत-तन्त्रपूर्व-
निर्माण निर्मल-मतेऽखिल-दोषदूर ।
आनन्द-पूर्ण-करुणाकर देवदेव
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ४ ॥

अर्क-आत्मजा-जल-तरङ्ग-विचारि-चारु-
वायूपनीत-शुभ-गन्ध-तरीय-वासिन् ।
अर्क-प्रभैण-वर-चर्म-धरोरु-धामन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ५ ॥

तर्का-भयेतकर तात शुकस्य कीट-
राज्यप्रदा-घटित-संघटक-आत्मशक्ते ।
भृत्य-अर्तिहन् प्रणत-पूरु-सुवंशकारिन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ६ ॥

कालॆ जलॆ जलदनील कृतॊरु-वर्मन्
आम्नाय-हारि-सुरवैरि-हर-अवतार ।
मत्स्य-स्वरूप कृत-कञ्ज-जवॆ-ददान
वासिष्ठकृष्ण मम दॆहि करावलम्बम् ॥ ७ ॥

गीर्वाण-दैत्य-बल-लॊलित-सिन्धु-मग्न-
मन्थ-अचलॊ-उद्धरण दॆव सुधाप्ति-हॆतॊः ।
कूर्म-स्वरूप धृत-भूधर नीरचारिन्
वासिष्ठकृष्ण मम दॆहि करावलम्बम् ॥ ८ ॥

क्षॊणी-हरॊरु-बल-दैत्य-हिरण्य-नॆत्र-
प्रध्वंस-दंष्ट्र-युगलाग्र-सुर-प्रमॊद ।
पृथ्वी-धरा-अध्वर-वराङ्ग वराह-रूप
वासिष्ठकृष्ण मम दॆहि करावलम्बम् ॥ ९ ॥

प्रह्लाद-शॊक-विनिर्मॊचन दॆवजात
संतॊष-दॊरु-बलदैत्य-हिरण्यदारिन् ।
सिंहास्य-मानुष-शरीरयुता-वतार
वासिष्ठकृष्ण मम दॆहि करावलम्बम् ॥ १० ॥
--
दॆवॆंद्र-राज्य-हर-दानव-राजयज्ञ-
शालार्थि-रूपधर वज्र-धरार्ति-हारिन् ।
याञ्चामिषा-दसुर-वंचक वामनॆश
वासिष्ठकृष्ण मम दॆहि करावलम्बम् ॥ ११ ॥

तातापकारि-नृपवंश-वनप्रदाह-
वह्नॆ भृगु-प्रवर राम रमा-निवास ।
सूर्यांशु-शुभ्र-परशु-प्रवरायुधाढ्य
वासिष्ठकृष्ण मम दॆहि करावलम्बम् ॥ १२ ॥

रक्षोधि–राज–दश–कन्धर–कुम्भकर्ण–
पूर्वारिकालन मरुद्वर–सूनु–मित्र ।
सीतामनोहर वराङ्ग रघूत्थ–राम
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १३ ॥

कृष्णा–प्रिया–प्रियकरा–वनिभार–भूत
राजन्यसूदन सुर–द्विज–मोद–दायिन् ।
भैष्मी–पुरःसर–वधू–वर–केलिकृष्ण
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १४ ॥

सद्धर्मचारि–जिनमुख्य–सुरारि–वृन्द–
सम्मोहन त्रिदश–बोधन बुद्धरूप ।
उग्रादि–हेति–निचयग्र–सनामितात्मन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १५ ॥

ज्ञानादि–सद्गुण–विहीन–जन–प्रकीर्ण–
काले कले–स्तुरग–वाहन दुष्टहारिन् ।
कल्किस्वरूप कृत–पूर्व–युग–प्रवृत्ते
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १६ ॥

यज्ञैतरेय–कपिलर्ष–भदत्त–धन्वं–
तर्यश्व–सन्मुख–कुमार–सुयोषिदात्मन् ।
सद्धर्म–सूनुवर तापस हंसरूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १७ ॥

सत्केशवादि–द्विषडात्मक–वासुदेवा–
द्यात्मा–दिना सुचतु–रूप सुशिंशुमार ।
कृद्धोल्क–पूर्वक–सुपञ्चक–रूप देव
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १८ ॥

नारायणादि–शतरूप सहस्ररूप

विश्वादिना सुबहु–रूप परादिना च ।
दिव्याजिता–द्यमित–रूप सुविश्व–रूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ १९ ॥

श्रीविष्णु–नाम–गष्णु–वर्णग–संधिगात्मन्
मंडूक–सत्तनुज–ह्रस्व–सुनामकेन ।
ध्यातर्षिणा सुसुखतीर्थ–कराब्ज–सेव्य
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २० ॥

वैकुंठ–पूर्वक–त्रिधाम–गत–त्रिरूप
स्वक्ष्यादि–धामगत–विश्वपुरः–सरात्मन् ।
सत्–केशवादि–चतुरुत्तर–विंश–रूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २१ ॥

सत्–पञ्चरात्र–प्रतिपाद्य–रमादिरूप–
व्यूहात्–पुरासु–परिपूज्य–नव–स्वरूप ।
विमलादि–शक्ति–नवकात्मक–दिव्यरूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २२ ॥

स्वायंभुवादि–मनु–संस्थित दिव्यराज–
राजेश्वरात्मक तथा सदुपेन्द्र–नामन् ।
सर्वेषु राजसु निविष्ठ–विभूति–रूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २३ ॥

प्रद्युम्न–पार्थ–नरवैन्य–बलानिरुद्ध–
पूर्वेषु संस्थित–विशेष विभूतिरूप ।
ब्रह्मादि–जीव–निवहाख्य–विभिन्न–कांश
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २४ ॥

श्रीवेंकटेश हरिनामक–व्यूह रङ्ग–
नाथा–विमुक्तिग–प्रयाग–गमाधवात्मन् ।

काञ्चीस्थ–सत्–वरदराज–त्रिविक्रमात्मन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २५ ॥

सत्–पृश्निगर्भ–पितृह्द्य–गयाप्रयाग–
वाराणसी–स्थित–गदाधर–माधवात्मन् ।
सच्छ्रीकराख्य–हरि–नामक–व्यूह–रूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २६ ॥

सद्वारका–रजत–पीठ–सुवर्ण–पूर्व–
ब्रह्मण्य–मध्यमठ–संस्थित–दिव्यमूर्ते ।
सत्पाजक–स्थित–गयास्थ–गदाधरात्मन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २७ ॥

वेदेश–मद्गुरु–करार्चित–पादपद्म–
श्रीकेशव–ध्रुव–विनिर्मित–दिव्यमूर्ते ।
श्री–भीमरथ्यामल–तीर–मणूर–वासिन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २८ ॥

श्री–पांडुरङ्ग–सुस्यमन्तक–गंडिका–श्री–
मुष्णादि–क्षेत्र–वरसं–स्थितानैक–मूर्ते ।
रूपैर्–गुणैर्–अवयवै–स्तदितः स्वनन्त
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ २९ ॥

अ आदिक्–षान्त–ततवर्ण–सुवाच्य–भूतै–
र्निर्भेद–मूर्तिक–महा–सदजादि–रूपैः ।
शक्त्यादि–भिर्विगत–भेद–दशैकरूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३० ॥

सूर्यानल–प्रभृति–ह्द्–दुरितौघ–तूल–
राशि–प्रदाहक–सुदर्शन–नामधेय ।
नारायण–आदिक–सुपञ्चक–दिव्यरूप

वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३१ ॥

इच्छादि–शक्ति–त्रितयेन तथाऽणिमादि–
शक्त्याष्टकेन–विगताऽखिल–भेदमूर्ते ।
सन्मोचकादि–नवशक्त्य–विभिन्नकांश
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३२ ॥

जीव–स्वरूप–विनियामक–बिम्बरूप
मूलेश–नामक सुसार–भुगिन्ध–रूप ।
प्रादेश–रूपक विराडथ पद्मनाभ
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३३ ॥

क्षीराब्धि–सङ्गत–महा–जलपातृ–वाड–
वाग्नि–स्वरूप परमाणु–गताणु–रूप ।
अव्याकृतांबर–गता–परिमेय–रूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३४ ॥

ब्रह्मादि–सर्व–जगतः सु–विशेषतो वी
सर्वत्र संस्थिति–निमित्तत ऐव चासः ।
व्यासः स वीति हि श्रुते–रिति व्यास–नामन्
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३५ ॥

निर्दोष–पूर्ण–गुण–चिज्जड–भिन्नरूप
श्रुत्या यतस्त्वधि–गतोऽसि ततस्त्व–नामन् ।
सच्छ्रीकराख्य–हरिनामक–व्यूहरूप
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३६ ॥

पैलौ–डुलोमि–वर–जैमिनि–काश–कृत्स्न–
कृष्णाजिनि–प्रभृति–शिष्य–सुसेविताङ्घ्रे ।
कानीन मद्गुरु–सुसेव्य–पदाब्ज–युग्म
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३७ ॥

नाना–विकर्म–जनिता–शुभ–सागरान्तः
संभ्राम्यतः परिहतस्य षडूर्मि–जालैः ।
पुत्रादि–नक्र–निगृहीत–शरीरकस्य
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३८ ॥

आशामद–प्रभृति–सिंह–वृकादि–सत्वा–
कीर्णेऽटतो भव–भयंकर–काननेऽस्मिन् ।
पञ्चेषु–चोर–हृतबोध–सुवित्तकस्य
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ३९ ॥

लक्ष्मी–निवास भवनीर–विहीन–कूप–
मध्य–स्थितस्य मदभार–विभिन्न–बुद्धेः ।
तृष्णाख्य–वारण–भयेन दिगन्त–भाजो
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ४० ॥

अज्ञान–मोह–पटलाद्–गत–चक्षुषोऽलं
मार्गान्–निजात् स्खलत ईश–दयाम्बु–राशे ।
किं–गम्यम्–इत्यविरतं रटतो रमेश
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ४१ ॥

आजन्म–चीर्ण–बहु–दोषिण ईश जातु
त्वत्पाद–नीरज–युगं हृदि कुर्वतोऽलम् ।
देवापराध–मन–वेक्ष्य च वीक्ष्य भक्तिं
वासिष्ठकृष्ण मम देहि करावलम्बम् ॥ ४२ ॥

आम्नाय–भारत–पुराण–सरः–प्रभूत–
वासिष्ठकृष्ण–स्तुति–पंकज–मालिकेयम् ।
देव त्वदर्थ–ममलां रचितोचितां तां
कृत्वा ध्रियस्व हृदये भव भूतिदो मे ॥ ४३ ॥

वासिष्ठकृष्ण–पदपद्म–मधुव्रतेन
वेदेशतीर्थ–गुरुसेवक–यादवेन ।
हस्तावलंबन–मिदं रचितं पठेद्यः
तस्य प्रदास्यति करं बदरी–निवासी ॥ ४४ ॥

वेदेशतीर्थ–गुरुमानस–नीरजस्थ–
श्रीमध्व–हृत्कमल–वासि–रमानिवासः ।
प्रीतोऽस्त्वनेन शुभदो मम देवपूजा
व्याख्यादि–सत्कृति–कृतो बदरीनिवासी ॥ ४५ ॥

॥ इति श्रीमत् यदुपत्याचार्य विरचितं श्री वेदव्यास करावलंबन स्तोत्रम् ॥